## ॥ अथ सम्पादकोक्ति ॥



अथैतस्य षष्ठकाण्डस्याभिधान मुखासम्भरण मिति । उखा नाम स्थाली, पाकपात्रविशेष, यस्था मुखाया मासानि पच्यन्ते, सोच्यते मासपचनीति । तद्यथा ऋक्संहितायाम (१ १६२ १३)—"यन्नीक्षण मासपचन्या उखाया या पात्राणि यूष्ण आसेचनानि"-इत्यर्द्धर्चं । तस्या उखाया सम्भरण सम्पादन मेतस्मिन् काण्डे विहित मतो याज्ञिका एतदुखा-सम्भरण मित्याचक्षते ।

तत्सम्भरणप्रकारोपदेशस्त्वित स्फुटतर माम्नातस्तैत्तिरीयकै स्वसंहितायाम् । तत्र हि, चतुर्थकाण्डीयप्रथमप्रपाठके एतदीय-मन्त्रा समाम्नाता, •तत पञ्चमकाण्डीयप्रथमप्रपाठके त्वेत-द्ब्राह्मणानीति । तदत्र सङ्ग्रहश्लोका —

"उखासम्भरणे मन्त्रा प्रथमे पाठके श्रुता ।
एकादशानुवाका स्युस्तदर्थास्तु क्रमादमी ।
अभ्र्यादानम्, मृदाक्रान्ति, खनन, हरण तथा ।
उखानिर्म्माणसस्कारौ, सामिधेन्यस्तथाग्निय ।
अग्न्युत्पादो धारणञ्च याज्या इत्यनुवाकगा"-इति,
"एकादशानुवाका स्युराद्येऽर्थास्त्वेव मीरिता' ।
सावित्राहुतिरभ्र्येश्च स्वीकार प्रथमे भवेत् ।
द्वितीये मृत्खनन गच्छन्नश्वेनाक्रामयेद् भुवम् ।

तृतीये तूत्क्रमय्याऽऽस्य भूसंस्कारो जलादिभिः ।
चतुर्थे तु मृदं खात्वा सम्भरेच्चर्मपर्णयोः ।
पञ्चमे सम्भृता नीता यज्ञभूमौ समाहरेत् ।
षष्ठे तूखां निर्मिमीते सप्तमे संस्करोति ताम् ।
अष्टमे पशवो वह्नेस्तस्यास्य नवमे जनिः ।
उख्यं दधीत दशमे— — — —"—इति च ।

तस्यैतस्य पाठान्तरादिसम्पादनाय सङ्गृहीताना मादर्श-पुस्तकाना मेव नामधेयानि कल्पितानि—

क= स्यात्पञ्चशताब्दीपूर्वलिखित ११९–पत्रात्मकमन्त्यपत्रहीनम् ।
ख= स्यात्पञ्चशताब्दाधिकपूर्वलि० १०५–पत्रात्मकमन्त्यपत्रहीनम् ।
ग= डा०—वेबर्–सम्पादितम् ( खृ० १८४९–मुद्रितम् ) पूर्णम् ।
घ= आजमेर–प्रकाशितम् ( स० १९५९–मुद्रितम् ) पूर्णम् ।
ङ= १६५४–सवल्लिखित ८०–पत्रात्मक (क० स० क०) पूर्णम् ।
च= आस्यायिकसमितितो लब्ध (ग० इ०) ८४–पत्रात्मक पूर्णम् ।

षट्स्वेषु चरमपुस्तकमात्र मेतत्कात्यायनीयभाष्यस्येत्यत एवै-तच्छोधनादावतीवायासः स्वीकृत, तथाप्येतत् सर्वतो निर्दोषता मुपगत न वेति संशयो मेऽद्यापीति विदुषा मिह क्षमैवाभ्यर्थ-नीयेति शम् ॥

कालीकोठा-राजन्वती । स० १९६५ । खृ० १९०८ ।
श्रीसत्यव्रतशर्म्मा । ( आवसथ्, सामश्रमी, आचार्येश्च )

# शतपथब्राह्मण-षष्ठकाण्डस्य सचीपत्राणि।

## ॥ अथ प्रपाठकसूची ॥



## ॥ अथाध्यायसूची ॥